# शिव सूत्र

## शिवसूत्रविवृतिः - प्रथमः प्रकाशः

१. चैतन्यमात्मा।

२. ज्ञानं बन्धः।

३. योनिवर्गः कलाशरीरम्।

क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात।

४. ज्ञानाधिष्ठानं मातृका।

५. उद्यमो भैरवः

६. शक्तिचक्रसन्धाने विश्वसंहारः

७. जाग्रत्-स्वप्न-सुषुप्त-भेदे तुर्याभोगसंवित्।

८. ज्ञानं जाग्रत्।

९. स्वप्नो विकल्पाः।

१०. अविवेको माया सौषुप्तम्।

११. त्रितयभोक्त वीरेशः।

१२. विस्मयो योगभूमिकाः।

१३. इच्छाशक्तिरूमा कुमारी।

१४. दृश्यं शरीरम।

१५. हृदये चितसंघट्टाद् दृश्यस्वापदर्शनम।

१६. १. शुद्धतत्वसन्धानाद्वा।

२. स्पपदशक्तिः।

३. शुद्वतत्वानुसन्धाद्वाऽपशुशक्तिः।

१७. वितर्क आत्मज्ञानम्।

१८. लोकानन्दः समाधिसुखम्।

१९. शक्तिसन्धाने शरीरोत्पत्तः।

२०. भूतसन्धान-भूतपृथक्त्व-विश्वसंधट्टाः।

२१. शुद्वविद्योदयाच्चक्रेशत्वसिद्वि।

२२. महाहृदानुसन्धानान्मन्त्रवीर्यानुभवः।

# शिव सूत्र

## सहजविद्योदयाख्य - द्वितीयः प्रकाशः

१. चित्तं मन्त्रः।

२. प्रयत्नः साधकः।

३. विद्याशरीरसत्ता मन्त्ररहस्यम्।

४. गर्भे चित्तविकासोऽविशिष्टविद्या-स्वप्नः।

५. विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था।

६. गुररुपाय।

७. मातृकाचक्रसम्बोधः।

८. शरीरं हविः।

९. ज्ञानमन्नम्।

१०. विद्यासंहारे तदुत्थस्वप्नदर्शनम

# शिव सूत्र

## विभूतिस्पन्दाख्यः - तृतीयः प्रकाशः

१. आत्मा चित्तम्।
२. ज्ञानं बन्धः।
३. क्लादीनाम तत्त्वानामविवेको माया।
४. शरीरे संहारः कलानाम।
५. नाडी संहार-भूतजय-भूतकैवल्य-भूतपृथनि।
६. मोहावरणात् सिद्धिः।
७. मोहजयादनन्तताभोगात् सहजविद्याजयः।
८. जाग्रद्द्वितीयकरः।
९. नर्तक आत्मा।
१०. रङ्गोन्तरत्मा।
११. प्रेक्षकाणीन्द्रियाणि।
१२. धीवशात् सत्त्वसिद्धिः।
१३. सिद्धः स्वतन्त्रभावः।
१४. १. यथा तत्र तथाऽन्यत्र।

२. विसर्गस्वाभाव्यादबहिः स्थितेस्तत्स्थितिः।

१५. बीजावधानम्।
१६. आसनस्थः सुखं हृदे निमज्जति।
१७. स्वमात्रा निर्माणमापादयति।
१८. विद्याविनाशे जन्मविनाशः।
१९. कवर्गादिषु माहेश्वर्याद्याः पशुमातसरः।
२०. त्रिषु चतुर्थं तैलवदासेच्यम्।
२१. मग्नः स्वचित्तेन प्रविशेत्।
२२. मध्येऽवरप्रसरः।
२३. प्रानसमाचारे समदर्शनम्।
२४. मात्रासु स्वप्रत्ययसन्धाने नष्टस्य पुनरुत्थानम्।
२५. शिवतुल्यो जायते।
२६. शरीरवृत्तिर्व्रतम्।
२७. कथा जपः।
२८. दानमात्मज्ञानम्।
२९. योऽविपस्थो ज्ञाहेतुश्च।
३०. स्वशक्तप्रचयोऽस्य विश्वम्।
३१. स्थितिलयौ।
३२. तत्प्रवृत्तावप्यनिरासः संवेत्तृभावात्।
३३. सुखासुखयोर्बहिर्मननम्।
३४. तद्विमुक्तस्तु केवली।
३५. मोहप्रतिसंहतस्तु कर्मात्मा।
३६. भेदतिरस्कारे सर्गान्तरकर्मत्वम्।
३७. करणशक्तिः स्वतोऽनुभावात्।
३८. त्रिपदाद्यनुप्राणनम्।
३९. चित्तस्थितिवच्छरीरकरणबाह्येषु।
४०. अभिलाषाद् बहिर्गतिः सम्बाह्यस्य (संवाह्यस्य)।
४१. तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः।
४२. भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः।
४३. नैसर्गिकः प्राणसम्बन्धः।
४४. नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसवयसौषुम्नेषु।
४५. भूयः स्यात् प्रतिमीलनम्।